√ अंश–अक्रुक्षत्

# A
# COMPLETE ETYMOLOGICAL DICTIONARY
## OF THE
# VEDIC LANGUAGE.

( AS RECORDED IN THE SAṂHITĀS )

## IN SAṂSKṚIT, HINDI & ENGLISH

**With special reference to Cognate Indo-European Languages, Past & Present.**

PREPARED AND CRITICALLY EDITED.

( With the help of a competent Staff )

BY

VIS'VA BANDHU S'ĀSTRĪ, M. A., M. O. L.

PRINCIPAL DAYĀNANDA BRĀHMA MAHĀVIDYĀLAYA, LAHORE.

FIRST FASCICULUS.

PUBLISHED BY

THE VIS'VES'VARĀNANDA RESEARCH INSTITUTE VEDIC ĀS'RAMA, LAHORE.

FOR

The Vis'ves'varānanda Sampatprabandhini Sabhā ( Simla & Delhi ).

PRINTED AT THE NIRṆAYA SAGAR PRESS, BOMBAY.

1929.

# A COMPLETE ETYMOLOGICAL DICTIONARY

## OF THE

# VEDIC LANGUAGE.

(AS RECORDED IN THE SAṂHITĀS)

**IN SAṂSKṚIT, HINDI & ENGLISH.**

**With special reference to Cognate Indo-European Languages, Past & Present.**

PREPARED AND CRITICALLY EDITED.

(With the help of a competent Staff)

BY

VIS'VA BANDHU S'ĀSTRĪ, M. A., M. O. L.
PRINCIPAL ḌAYĀNANDA BRĀHMA MAHĀVIDYĀLAYA, LAHORE.

FIRST FASCICULUS

PUBLISHED BY

THE VIS'VES'VARĀNANDA RESEARCH INSTITUTE VEDIC ĀS'RAMA, LAHORE.

FOR

The Vis'ves'varānanda Sampatprabandhini Sabhā (Simla & Delhi).

PRINTED AT THE NIRṆAYA SAGAR PRESS, BOMBAY.

1929.

अथ

# वैदिक-शब्दार्थपारिजातः

अर्थात्

( सकलसंहितान्तर्गतपदजातस्य पौरस्त्यपाश्चात्यशैल्यनुसार्यर्थविस्तरस्या-
ऽभूतपूर्वः सम्पूर्णस्त्रैभाषिकः सञ्चयः )

स च

( सुयोग्यविपश्चिन्मण्डलस्य साहाय्येन )

लवपुरस्थदयानन्दब्राह्ममहाविद्यालयाचार्य्यपदाधिकृतेन, एम्. ए., एम्. ओ. एल्.,
इत्युपाध्यलङ्कृतेन विद्वन्मणिना विश्वबन्धुशास्त्रिणा

संकलय्य परिष्कृत्य च सम्पादितः ।

तस्य चायं प्रथमः खण्डः ।

सिमला-देहलीवर्त्तिन्या विश्वेश्वरानन्दसम्पत्प्रबन्धिन्याः सभायाः कृते
लवपुरीयवैदिकाश्रमस्थ-विश्वेश्वरानन्दानुसन्धानकार्यालयाध्यक्षेण
मुंबापुर्यां 'निर्णयसागर'मुद्रणालये निर्णयं नीतः ।

१९२९

# समर्पणम् ।

यदर्थं तेनतुर्यत्नान् प्राणान्तान् मुनिपुंगवौ* ।
प्रेमतुर्भारते वर्षे महत् कार्यञ्च चक्रतुः ॥ १ ॥

समारब्धः समारम्भः स एव श्रद्धया मया ।
गच्छेत्पूर्त्तिं प्रभोः प्रीत्या स्मारयेदपि तावुभौ* ॥ २ ॥

वेदाम्बुधिः क्व गम्भीरः क्वाज्ञाततरणो जनः ।
तरङ्गपतितस्य स्यास्त्वं सहायः प्रभो! मम ॥ ३ ॥

त्वदीया प्रेरणा बीजं त्वत्प्रसादः प्रसाधकः ।
पुष्पपत्रनिभं देव! भवेदेतत्त्वार्पितम् ॥ ४ ॥

विश्वबन्धुः

*स्वर्गीय स्वामी विश्वेश्वरानन्दजी महाराज तथा उनके प्रिय शिष्य, स्वर्गीय स्वामी नित्यानन्दजी महाराज ।

# उपोद्घातः ।

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ य० २५।२१ ॥
उपहूतो वाचस्पतिरुपास्मान् वाचस्पतिर्ह्वयताम् ।
सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि ॥ अ० १।१।४ ॥

ओमित्येकाक्षरं ब्रह्म परं गुह्यं सनातनम् ।
वेदराशिप्रदं शुद्धं चित्स्वरूपं नमाम्यहम् ॥ १ ॥
ऋषीन् वन्दे मुनीन् वन्दे वन्दे चैव गुरूनहम् ।
यत्प्रसादात् प्रवर्धन्ते धियोऽजस्रं मनीषिणाम् ॥ २ ॥
यतिश्रेष्ठं दयानन्दं पूर्वांश्चापि गुरूत्तमान् ।
सर्वान् वेदविदो धीरान् प्रणमामः पुनः पुनः ॥ ३ ॥
चन्द्रार्कौ जगतः प्रकाशनविधौ सत्यं यदि स्तो ध्रुवौ
पापस्यापहृतौ च सज्जनकृतिर्दुर्वारशस्त्रं ध्रुवम् ।
ब्रह्मानन्दरसामृतस्य न कथं कुर्युः समन्ताद् भुवि
वेदादर्शमरीचयः सुमहसश्चारु प्रसारं ध्रुवम् ॥ ४ ॥

अयि सरस्वतीचरणाम्बुजषट्पदाः सदा विविधविद्यावीथिकासँल्लग्नहृदयाः सहृदयाः सज्जनाः, प्रत्यक्षमेवैतत् तत्रभवतां निरन्तरं शेमुषीजुषां यद्वेदान् प्राक्कालिकतयाऽतिशयाना ग्रन्था भूतले नैव विद्यन्ते । यदपि ज्ञानमिह मानुषहृदयस्याऽऽह्लादकरं पुरुषोत्कर्षसाधकं च समुल्लसति, तस्य समग्रस्य बीजं वेदा एव । आर्यजनतायास्तावदुपक्रमादेव स्वतःप्रमाणत्वेन सर्वधर्ममूलत्वेन च ते पूजाया अनुत्तमाया भाजनम् । समस्तानामेवाऽऽचार्याणां मिथो वैमत्यभाजामपि वेदानामग्रे तूष्णीमवस्थाय सर्वथा सर्वदा चोत्तमाङ्गानि प्रह्वीभवन्ति । वेदानुरोधित्वमेव धर्मस्याव्यभिचारि लक्षणम् । श्रुत्यनुसारिण्य एव स्मृतयः प्रामाण्यमर्हेयुरिति सर्वसिद्धान्तसम्मतो न्यायः । तथा ह्याह महामुनिर्भगवान्मनुः—

सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ १ ॥
अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥ २ ॥

सर्वो हीह जनो लोकपरलोकसाधनपरो भवति । अभ्युदयनिःश्रेयसयोर्मूलभूतायाः श्रुतेः स्वाध्यायोऽतो नित्यधर्मत्वेन विहितः । तदकरणे प्रत्यवायश्च भवति । यतश्च वेदनिन्दया मनुष्यो नास्तिको भवति, तत्कर्त्तव्य एव महता परिश्रमेण तदाशङ्काया अप्यपनोदो भूतिमिच्छता नरेण—

"अनादिनिधनेयं वाक् स्वयं सृष्टा स्वयम्भुवा ।
श्रुतमात्रा पुनीयाच्चेत् कृताभ्यासाथ कीदृशी ॥"

निन्दा च विरुद्धाचरणेन विरुद्धभावनेन च संभवति । एतच्चार्थसाक्षात्कारनिबन्धनम् । अतिप्राचीना तु वेदवाणी नेदानीं लोके व्यवह्रियते । पारम्पर्यविद्भिः प्रमाणीकृतादर्थादृते निगमार्थमवजिगमिषूणां गत्यन्तरं नास्ति । ब्राह्मणानि प्राचीनतमानि वेदव्याख्यानानि । भूयांसु तद्विस्तरः । प्रतिपदमर्थलाभश्च दुष्करः । निघण्टून् निर्ब्रुवता स्वकीयकृतौ यास्कमुनिनापि व्याख्याताः कतिचिद्वचः । अल्पीयसी तु तासां संख्या । पुराणत्वाच्च तद्भाषाया अतिसूक्ष्मत्वाच्च तद्विषयस्य तदवबोधस्याप्यनीशानः कथं बत तदुपाश्रयेणैव वेदार्थविषये मुक्तसंशयो भविष्यति साधारणो जनः ? शास्त्रतश्च साधुतां नीता अपि शब्दाः कया रीत्याऽर्थविशेषेषु प्रवर्त्तन्त इति नैव सदा सुबोधमिव भवति । निरुक्तयो हि निरूढ-

शब्दानां तत्र तत्र प्रवृत्तिनिमित्तमेवाचक्षते । तथा ह्यश्वशब्दः प्रकृतिप्रत्यययोगतोऽध्वादिकमनिर्दिष्टमत एवाध्याहार्य्य-मर्थबलादूह्यश्चाश्नुवानमात्रे सन्नतः कथं क्वचित् सूर्यं क्वचिद् विद्युतं क्वचिच्च पशुजातिविशेषं प्रकरण-सङ्गमनबलेनाचक्षीतेति समन्वयमन्तरेण नैव बोद्धुं शक्येत । न तु सर्वे एवंविधाः सङ्गमयितारो भवन्ति । अतः कयाचित् सरण्या भाव्यं यामु-पाश्रित्य पूर्णं बोधमाप्नुवन्तो वेदार्थेऽसंदिहानाश्च प्रमोदं लभेरन् वेदानामध्येतारोऽध्यापयितारश्च ।

परमकारुणिकैश्च साक्षात्कृतधर्मतत्त्वैर्महर्षिपुङ्गवैस्तत्र २ निगमेषु विविधोपयोगिविद्याबीजानि महता प्रयत्नेनोपलभ्य, वेदप्रासादमारुरुक्षूणां साधारणजनानामनुजिघृक्षया सोपानपङ्क्तिसंकाशं वेदाङ्गचक्रं निजधियाऽतिसूक्ष्मया निरमायि । यत्तदात्वे वेदाभ्यासे साहाय्यं वितन्वन्ति वेदाङ्गान्येतान्येवमुपकारकाणि बभूवुस्तदद्यत्वेऽपि तथैव सहायकानि भविष्यन्तीति किमु वक्तव्यम् । वेदाङ्गानां स्वतन्त्राभ्यासेन सहकृतश्च परम्परागतभाष्यव्यूहाभ्यासः सम्यग् अवतारयेच्छ्रुतिभावमध्येतॄणां चेतसि । इत्थं स्वाध्यायशीलस्यैव समालोचनप्रखरा मतिर्विकासमुपेयात् । एतामन्तरेण च मानुष्यकसुलभप्रमादवैकल्यवैवश्यात् सत्यानृते मिथुनीकृत्य प्रवृत्तानां तेषां २ भाष्याणां युक्तायुक्तांशविवेकोऽपि सुदुष्करो भवेत् । अत एवायुक्तसम्प्रधारणतो विगीताचरणतश्चोद्भूभूषतः पापसन्दोहस्यापहत्यर्थं तर्कशक्तिपर्य्यवसानो बुद्धिविकासः सर्वैर्वेदातुरक्तैरादरणीयः । एतद-भिप्रेत्यैव च 'यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' इत्यादि तर्कस्तवात्मकं शास्त्रीयं वचनजातम् ।

एवमुद्भूततर्कशक्तेरपि स्वतन्त्ररूपेण वेदाङ्गान्यभ्यस्यतोऽपि तावत् सम्पूर्णतया सर्वा सामग्री आत्मायत्तीकर्तुं न पार्येत । इदानीन्तने च स्मृतिशक्तिरपि कुण्ठिता । कः शब्दः कस्मिन्नर्थे कथं कदा च प्रयोगमवाप्तवान् इत्यत्रापि केवलं विकला स्मृतिर्वाऽपूर्णा स्वबुद्धिशक्तिर्वा नाश्रयितुं युज्यते । अपेक्ष्यतेऽत्र किञ्चिद् बाह्यं साधनम् । तच्चापेक्षितं साहा-य्यमभिधानिकैरेव कर्तुं युज्येत । सन्ति च नाम बहवो देववाण्याः शब्दकोषाः । न त्वेकोऽपि केवलं वेदान् चतुरः समाश्रित्य व्यरचि । लौकिकाश्च वैदिकाश्च शब्दास्तदीया अर्थाश्च विद्यमानेषु कोषेषु व्यामिश्रिता एव वर्त्तन्ते । तत्रापि लौकिकस्यैव भागस्य प्राधान्यमुपसर्जनीभूतोऽपरो भागः । एवम्प्रकारेण किलोडुपेन निगमाब्धिं सन्तितीर्षोः कथमङ्ग वैया-कुली न सञ्जायेत । अत इयमपि सरणिः परिष्कारविशेषविरहिता न पर्याप्ता भवेत् ।

प्राक्तनैर्म्रुषिभिः सहाऽर्वाक्तना अपि भाष्यकारा बहवो विद्यन्ते । तथाहि, देवराजयज्वना निघण्टवो विस्तरेण व्याख्याताः । दुर्गाचार्य्यश्च यास्कीयं निरुक्तं विवृण्वन् निगमावबोधे पर्य्याप्तं साहाय्यं वितनोति । सर्ववेदभाष्यकारो माधवा-नुजः सायणाचार्य्यः सर्वप्रसिद्धो न कस्यापि वेदविद्याविनोदिनोऽविदितः स्यात् । महीधरश्च सोव्वटो यजुषां व्याख्याता वैदिकस्य जनस्यास्ति प्रतीततरः । आसन् बहवोऽन्येऽपि वेदार्थप्रदर्शकाः । न तु तेषां सर्वेषां कृतयोऽधुना साकल्येनोपलभ्य-न्ते । वेङ्कटमाधव-भट्टभास्कर-भरतस्वामि-स्कन्दाऽऽ-नन्दतीर्थादिकतिपयसुगृहीतनाम्नां भाष्याणि तावदन्विष्य पुरातनपुस्त-कान्वेषकैर्यत्सत्यं महानुपकारः कृतः । न साम्प्रतं वेदव्याख्यानवाटिकायां सायणपादप एवैकाकित्वेन शोभते । तदाश्रयभूतानां तत्पूर्ववर्त्तिनां केषांचिद् विदुषां नाम्नापि तद्रचितग्रन्थाविर्भावनेनापि वियत इदानीं वैदिक्या विद्याया अविच्छिन्नाभ्यास-क्रमो विशदीकृतः ।

यद्यप्येतत्सत्यं यद् वैदिकी विद्या नात्यन्तं तिरोभावमुपगता । तथापि यवनसाम्राज्ये प्रायेणासौ निद्राणैवासीत् । वैदेशिकोपद्रवाभिभवाद् विनष्टे स्वीयसाम्राज्ये, परस्परं कलहायमानेषु तेषु २ राजवंशावतंसेषु, नक्तंदिवमुद्दीप्तासिधारा-प्रहारसंत्रासविद्राविते सकले योगक्षेमप्रत्ययेऽपगते शान्तगम्भीरजीवनानुकूले काले, वर्धमाने चात्यन्तघोररौद्रानर्थसमाचारे याज्ञिकक्रियाणां दुस्सम्पादत्वादेवमभूदथवा तत्त्वतः परिहीयमानस्य नव्यन्यायव्याकरणादिनूतनशब्दाडम्बरमुग्धस्य तदानीन्त-नस्य पण्डितवर्गस्य स्वीयाया एव नातिप्रशस्तायाः प्रवृत्तेरेतत् फलमभूदिति विवेक्तुं नैवाधुना शक्यते । अज्ञातकारणसामग्री-कोऽप्ययं वैदिकीं विद्याम्प्रत्यौदासीन्यात्मकः परिणामोऽशक्यनिदानाऽरुन्तुदरुग्विशेषवदपह्नोतुं न शक्यते । सुमहतः किल कालादनन्तरं पुनः परमात्मनोऽतिकृपया वेदभानुः सकलविद्याप्रकाशकत्वेनानुभूयेततराम् । सदातनार्य्यधर्मावलम्बिनां पुनरपि ब्रह्मगवीपीयूषपाने रुचिर्जागर्त्ति । पुनरेवम्प्रवर्त्तकश्चास्माकं श्रद्धाभाजनं सकलगुणगरिष्ठो मुनिवरो दयानन्दः । स हि विजित्य कामान् अभिभूय मोहमयीं निद्रां शमयित्वा मनो दमयित्वेन्द्रियग्रामं मार्गविघातकानि परःशतानि विमर्द्य प्रलोभनानि परःसहस्राणि धीरवृत्त्यावधीर्य्य शार्दूल इवर्षिशार्दूलोऽवक्रगत्यैव सकलोपघाताम्बुधिमुत्ततार शैलोच्चयसुदृढं पारञ्चावाप । लुप्त-प्रायान् वेदान् विद्यातपोबलेन स पुनरुदधीधरत् सत्यार्थांश्च प्राचीचरत् । पञ्चाशद्भ्यः किञ्चिदधिकेभ्यश्च वर्षेभ्यो हरिवर्षे (यूरूपे) पातालदेशे (अमेरिकेतिनाम्नि) च वेदाध्ययनस्यानल्पः प्रचारोऽस्ति सञ्जातः । अत्र च वेदानामतिप्राचीनत्वं तद्भाषाया भारतीयाभिस्तद्देशीयाभिश्च भाषाभिः प्रत्यक्षाभिसम्बन्धित्वं तद्विचाराणां चार्वाक्सम्प्रदायप्रवर्तकत्वं सामान्यरूपेण च तत्पाठस्य मानवेतिहासपरिचायकत्वं निदानमभूत् । आदौ सायणोपष्टम्भेन वेदानधीत्य, कालक्रमेण बहुषु प्रकरणेषु तेन वैमत्यमभिः पाश्चात्यैर्विद्वन्मणिभिराम्नायबोधप्रक्रियान्तरस्य भाषाशास्त्रविज्ञानोपनिबन्धस्य स्वतन्त्राविष्कारमुद्घाट्योद्घोषयद्भि-र्बह्वीषु भाषासु स्वकीयाष्टीका अकृषत । अनेन प्रकारेण नानाविधा वेदार्थसहायिका सामग्री साम्प्रतमुपतिष्ठते ।

एवम्प्रकारिकां बहुदेशेषु बहुभाषासूपलभ्यमानामेकांशेनायसाक्षरैर्मुद्रितामपरांशेनाद्यापि दुरूढहस्तलेखारिमकां परःसहस्रेण धनव्ययेन यथाकथमप्युपलब्धव्यामथवा तथापि सर्वात्मना लब्धुमशक्यां विचित्रां सामग्रीं यो नाम महामनस्को दृढचित्तबन्धो यावज्जीवनविस्तारिणा प्रयत्नेनोपयुञ्जीत भवेदेव सोऽसंशयं सम्यग् वेदसागरस्नातकः । पुरुषास्तूक्तसाधनसम्पन्नाः कियन्तो जगति लभ्यन्त इति विचारजुषान्न तिरोहितम् । उदरदरीप्रपूर्त्तिचिन्तादोलायमानाश्च साम्प्रतिका जना अत्यधिकं कालं धनक्षयञ्चापेक्षमाणेऽतिकठिनेऽसहाये वेदार्थविचारे स्वतन्त्ररूपेण प्रवर्त्तेरन्नित्याशापि मिथ्यैव प्रतीयते । क्षीरसागर इवागमार्थविस्तरे सत्यार्थमहार्घमणिभिः सहैव हलाहलकल्पमिथ्याकल्पनाजालमपि सुकुमारमतीनामायासकरं वरीवर्त्तीत्यपि न विस्मरणार्हम् ।

एवं किल सर्वान् विचारान् सम्प्रधार्य्य सकलवेदभक्तोपकारधियाऽऽर्य्यपरिव्राजकपुङ्गवौ गुरुशिष्यसम्बन्धयुजौ सयुजौ स्वामिविश्वेश्वरानन्दनित्यानन्देतिसुगृहीतनामधेयौ पूर्वोक्तायाः सर्वविधायाः सामग्र्याः सम्यगुपयोगार्थं समालोचनपूर्वकञ्चैकस्मिन्नेव पुस्तके तत्सन्निवेशार्थं महाह्लादकरं पुण्यमयं सङ्कल्पमितः पञ्चविंशतिवर्षाणि पूर्वमकार्ष्टाम् । आदौ तावत् ताभ्यां वेदशब्दसूचिकाश्चतस्रः प्रकाशिताः । तदनु क्रियमाणेऽन्यप्रबन्धविचारेऽर्थसाहाय्यविषये च याच्यमानेऽनेकभूपवर्गे भवितव्यताया दुरतिक्रमत्वस्यैवोदाहरणमिवापरं प्रदर्शयन्नित्यानन्दो नित्यानन्दे निलिल्ये । इत्थं दैवहतकेन वियोजितोऽपि परमबन्धुना, कर्त्तव्यैकपरायणो भगवद्भक्तो ज्यायान् मुनिर्विश्वेश्वरानन्दो निजजीवनस्य प्राणानिव बहिश्चरान् नानाविधान् अर्थसञ्चयरूपानथ व्युत्पन्नविपश्चित्संग्रहात्मकान् प्रयत्नान् न क्षणमपि जातुचित् स्वमनसो व्यपारोपयत् । पञ्चषेषु प्रसिद्धेषु काश्यादिपुण्यपत्तनेषु विंशतिवर्षाणि यावत् वेदशब्दार्थकोषसम्पादनसम्भारेषु बहुमात्रमर्थव्ययमपि कृत्वा तदर्थमेव च यत्र कुत्राटाट्यामपि स्वीकुर्वाणः समीहितसिद्धिसमुद्भवां तुष्टिमान्तरिकीं नैवाप्नोति स्म । इतः षड् वर्षाणि पूर्वं वैक्रमाब्दस्य १९८० इत्यस्यावसाने लवपुरीमुपेयुषा तेन निजसुहृद्भिः पुरातनैरार्यसमाजमस्तकमणिभी रायबहादुरमूलराजमहात्महंसराजप्रभृतिभिः पारस्परिकविचारं कुर्वताऽन्ततोऽस्य समग्रकार्य्यस्य सम्पादनभारोऽस्मच्छिरसि न्यस्तः । स्वकीयेऽनुभवराहित्येऽप्येतावद्भारोद्वहनाक्षमत्वेऽप्यन्यद्बहुविधकार्यसंलग्नत्वेऽपि कार्यस्यास्य पुण्यात्मकत्वादथापि वन्द्यवृद्धानुरोधाद् आज्ञा तदीयास्माभिः शिरसाऽधायि ।

अस्मिन् कोषे चतुर्णां वेदानां संहितानामेव समस्ताः शब्दाः समावेश्यन्ते । प्रथमं पाणिनीयमतानुसारिणी विविधभाष्यकारानुमता च व्युत्पत्तिः प्रदर्श्यते । तदनु यथासंभवं यास्कीयं निरुक्तमुद्ध्रियते । अथ ब्राह्मणग्रन्थेभ्य आरभ्याऽऽनवीनतमपौरस्त्यपाश्चात्यव्याख्यानेभ्यः सर्वे प्रमाणिता उपलभ्यमानाश्चार्थाः सङ्कल्यार्थाभिधानतारतम्यवशेन यथाक्रमं व्यवस्थाप्य प्रकटीक्रियन्ते । प्रत्यर्थविशेषञ्च मूलाधारः प्रमाणत्वेन सङ्केत्यते । तद्बलेन च सोऽर्थस्तत्र तत्र लब्धुं सुकर एव । ये च पाश्चात्यानां व्याख्यानेषु नवीना भारतीयभाष्येष्वनुपलभ्या अर्थाः सन्ति तेऽपि तत्तद्भाषानभिज्ञास्मदीयपण्डितवर्गस्य कल्याणाय देवगिरैव निर्दिष्टाः । तदनु सर्वे इमेऽर्थभेदा आर्य्यभाषयापि सर्वलोकानुजिघृक्षयानूद्यन्ते । एतदनन्तरं पाश्चात्यानां सर्वेऽर्था अनेनैव क्रमेण तद्भाषयैवोपनिबद्धाः । प्रत्येकप्रातिपदिकस्य यावन्ति सुबन्तरूपाणि दशस्वपि संहितासु प्रयुक्तानि तानि साकल्येन विभक्तिवचननिर्देशपुरस्सरं प्रकाश्यन्ते । तिङन्तरूपाणामन्येषाञ्च पदानां यथायथमनेनैव क्रमेण व्याख्यानं क्रियते ।

**अस्य च कोषस्य सम्यगवबोधनार्थं केचिदुल्लेखप्रकारविशेषाः केचिच्च सङ्केतविशेषाः पाठकैरवश्यं परिचेतव्या इति त एवेदानीं प्रदर्श्यन्ते—**

(क) यदा कस्यचित् पदस्यार्थभेदानुसारि स्वरभेदसूचितं वैविध्यं वर्तते, तदा ते भेदाः पार्थक्येनैव निर्दिश्यन्ते प्रतिनिर्देशञ्च स्वतन्त्रं पदत्वमङ्गीक्रियते (यथाः—अपः, अपः)।

(ख) यदा तु रूपवैविध्यं लेखकप्रमादादिदोषजमर्थभेदमननुसरद् दृश्यते तदा स्वरसंस्कारमाद्रियद् बहुषु पुस्तकेषु लभ्यमानञ्च रूपं प्रधानीक्रियतेऽथ कोशस्थीकृत्य भेदोऽपि सन्निहितमेव प्रदर्श्यते (द्र०ः—अंसुध्री)।

(ग) यत्र २ च पदकृतां पदविभागः पश्चिमभाष्यविसम्वादी भवति तत्र २ सोऽपि कोशस्थीकृत्य पार्श्व एव प्रदर्श्यते (यथाः—अरऽमनस्, अंहुःऽयुः)।

(घ) प्रतिपदमशक्यतया लक्षणमकुर्वता लक्षणशास्त्रेण सर्वाणि पदानि सामान्यरूपेण सिद्ध्यन्त्यपि विशेषसिद्धिमपेक्षमाणानि रूपातिदेशेन वृत्त्यतिदेशेन वा व्युत्पाद्यन्ते । सङ्केतितस्थलेषु चातिदिष्टरूपव्युत्पत्तिरेव गवेषणीया (यथाः—अंस, अंशुभू, अंहूरः, अर्कवः)।

(ङ) यत्र च धातुनिर्देशमात्रं कृतं तत्र तावन्मात्रमेव केनचिद् विदुषोद्दिष्टमिति बोद्धव्यम् । एषैव प्रायिकी रीतिरर्वाक्तनानाम् ।

(च) प्रतिपदञ्चार्थस्य मुख्याः प्रभेदाः क्रमसंख्याभिः प्रदर्शिताः । तत्रैव चोपभेदा अभिसम्बद्धमुख्यार्थे 'क, ख' इत्यादिरीत्या विस्पष्टपृथग्भावा अन्तर्निवेशिताः । प्रत्यर्थनिर्देशञ्च प्रमाणभूततत्तद्भाष्यस्थलानां तत्कर्तृनाम्नाञ्च सम्यग् निर्देशो व्यधायि ।

(छ) यदा च कस्यचिदर्थस्य कोषविशेषादुल्लेखोऽकारि, तदा तत्सङ्केतोऽनिवार्य्यत्वात् क्रियतेऽन्यथा बहुषु कोषेषूपलभ्यमानेऽर्थविशेषे 'को०' इति सामान्यमेव सङ्केत्यते।

(ज) ऋग्वेदाष्टममण्डलस्य वालखिल्यसूक्तसमावेशपूर्वकं काठकसंहितायाश्च परिशिष्टसमावेशपूर्वकं क्रमसंख्याया उल्लेखः क्रियते तथैव चासौ बुध्यमानोऽमीष्टप्रकरणगवेषणे साहाय्यं वितनुयात्।

(झ) कतिपये मन्त्राश्च बहुषु संहितासु श्रूयन्ते। तासां काश्चिद् व्याख्याता अन्याश्चाद्यावधि न व्याख्याता अथवा लुप्तव्याख्याः सञ्जाताः। एवम्प्रकारकेषु स्थलेषु समानपाठानि स्थलान्तराणि साम्यसूचकेन (=) इति सङ्केतेन प्रदर्श्यन्ते। अनेन तथाविधभागाध्ययनप्रसक्तानां महानुपकारो भविष्यति (द्र०:-अंश,-४)।

(ञ) क्वचित् पदान्तरं व्याचक्षाणैर्भाष्यकारैस्तदवयवभूतस्याथवा तेन वृत्तिसाम्यभाजः पदान्तरस्यापि व्याकरणं प्रदर्श्यते। एतादृशमपि सकलं पदार्थजातं यथास्थानसमावेशमत्रोद्धृतम् (यथाः-अंहु,-५, 'अंहुभेदी' इति व्याचक्षाणः)।

(ट) प्रत्ययानामनेकार्थाभिधायित्वादपि केचिदर्था भिद्यन्ते। मिथः सन्निकृष्टा अपि ते वैशद्यमनुरुध्य पृथगेव प्रदर्श्यन्ते। आर्यभाषानुवादे तु सारल्यमपेक्ष्य संग्रहमात्रमेवाकारि (द्र०:-अंस)।

(ठ) = इत्येतत् साम्यप्रदर्शकं चिह्नं समानपाठप्रदर्शनार्थं प्रयुज्यते (द्र०:-अंश,-४)।

(ड) √ इत्येतत् पाश्चात्यानां धातुप्रदर्शकं चिह्नं पदनिर्वचनादौ प्रयुक्तम् (द्र०:-√ अंश)।

(ढ) † इत्येतच्चिह्नाङ्कितानि प्रातिपदिकानि तेषां सुबन्तादिरूपाणि वा वेदत्वेन प्रसिद्धाभ्यश्चतसृभ्यः संहिताभ्योऽतिरिक्ताभ्यस्तैत्तिरीयादिभ्य उद्धृतानीति ज्ञाप्यते (यथाः-† अंशुभू)।

(ण) ‡ इत्येतच्चिह्नवन्ति च तादृंशि सन्त्यपि मूले स्वराङ्कवियुञ्जि अस्माभिरेव स्वराङ्कवन्ति कृतानीति द्योत्यते (द्र०:-अंहोगृहीत)।

(त) ( ) इतीदृशस्य वर्त्तुलकोशस्येमे प्रयोगाः—

(१) पदार्थविशेषस्य विशदीकरणार्थमभिसम्बद्धभाष्यकृद्वचनोपाश्रितव्याख्यानाविशेषस्य निर्देशः (द्र०:-अंशुमत्,-८)।

(२) अनन्याश्रितस्य सम्पादकीयस्यैव तादृशप्रयोजनकस्य निर्देशस्य प्रदर्शनम् (द्र०:-अंश,-२ ग) § इति चिह्नं चापि दीयते।

(३) भाष्यकृद्विशेषस्य कञ्चिदस्पष्टं पाठमुपाश्रित्य कश्चित् पदार्थो यथास्माभिर्निर्धारितस्तथा तस्य प्रदर्शनम्। पूर्ववत् § इति चिह्नं च प्रयुज्यते (द्र०:-अंहुसत्य,-१)।

(थ) ? इत्याशङ्कासङ्केतस्यात्रेमे प्रयोगाः—

(१) भाष्यकृद्विशेषस्य नाम्नोऽनन्तरं प्रयुज्यमानमेतत् तस्मिन् पदार्थविषयेऽसावस्मान् प्रत्यस्पष्ट इति प्रदर्शयेत् (द्र०:-अंसध्री,-२ सा० ?)।

(२) भाष्यकृद्विशेषस्य नाम्नः प्राक् प्रयुज्यमानं तस्यैव मनसि स्वोपज्ञार्थविशेषविषये विद्यमानं संदेहं प्रदर्शयेत् (द्र०:-अंसध्री, ? Wh.)।

(३) [ ] ? इत्येवं चतुरस्रकोशसहप्रयोगोऽन्तर्निविष्टस्य पदार्थजातस्य स्वरसंस्कारलक्षणविरोधित्वं प्रदर्शयेत्।

(४) (पु० पा० ?) इत्येवं वर्त्तुलकोशे प्रयोगः प्रकरणविशेषेऽभिसम्बद्धस्य पुस्तकविशेषस्य तदवस्थस्वीकारप्रतिबन्धिकां पाठवैयाकुलीं प्रदर्शयेत् (द्र०:-'अर्कव' इत्यत्र 'अर्कवाभिः' इत्यस्यार्थः 'अनिन्दितृभिः' द०)।

(५) ([ ]) इत्येवं कोशद्वयान्तर्गतशब्दाः क्रियमाणव्याख्यापदविशेषस्य विशिष्टव्याख्यानार्थं प्रयुक्ता इति ज्ञातव्यम्।

(द) * इति चिह्नवन्तः पदार्थाः लौकिका एवेति ज्ञातव्यम् (द्र०:—अंशु-२*)।

(ध) — इति स्थूलरेखास्थलाङ्कविशेषात् पूर्वं प्रयुज्यमाना पूर्वेऽपि निर्देशरहिता अर्थास्तत्रैव स्थले वर्त्तन्त इति प्रदर्शयेत् (द्र०:—अंहुस्पत्य)।

(न) ⟶ इति चिह्नं पाणिनीये प्रसिद्धमादेशपदार्थं प्रकटयेत् (द्र०:—'अर्कव' इत्यत्र कु ⟶ कव)।

(प) ' ' इत्युपरिचिह्नान्तर्गतपाठो विग्रहादिप्रदर्शनार्थः पदार्थनिर्देशात् पूर्वं बहुषु स्थलेषु वैशद्यार्थं प्रयुक्त इति ज्ञातव्यम्।

(फ) ० इति चिह्नं पदानामुपरि दक्षिणतो वामतो वा प्रयुज्यमानमागामिनीमागतपूर्वां वा तद्व्युत्पत्तिं प्रदर्शयेत्। पुनरुक्तनिवृत्तिपरैषा युक्तिः।

(ब) § इति चिह्नसहयुजः शब्दा अर्थाश्च सम्पादकीया एवेति सर्वत्र विवेक्तव्यम्।

कोषे चास्मिन्नपयुक्तस्य ग्रन्थराशेर्विवरणमाङ्गलभाषोपनिबद्धे भूमिकांश एव कृतम् । एवं ग्रन्थानां च ग्रन्थकाराणां च वैयाकरणसंज्ञापरिभाषादीनां च सद्योग्रहणार्थं व्यर्थगौरवनिवारणार्थं च संक्षेपपराः सङ्केता अपि तत्रैव प्रदर्शिताः । देवनागराक्षरैरुपनिबद्धास्तेऽस्मदीयानां विपश्चितामपि विस्पष्टा एव भवेयुरिति नात्र तद्विषयकं पुनरुक्तमपेक्ष्यते । तत एव यथावसरं पण्डितवर्य्यैस्ते सिंहावलोकनगोचरीकर्तव्याः । अस्मिंश्च पुण्यकर्म्मण्यभूवन् ममासव्यभुजसन्निभाः सहायाः सरस्वतीमन्दिराप्रतिहतप्रवेशा अत्रत्यानुसन्धानकार्य्यालयाङ्गभूता बहवः पण्डितवराः । विबुधस्य नत्थुरामशास्त्रिणः स्थैर्य्यं प्रशंसनीयम् । विशेषरूपेण च भीमदेवपण्डितस्यात्र परिश्रमः प्रशस्यते । क्रियते चान्यैरपि महानुभावैः साहाय्यम् । ग्रन्थावसान एव निजभावप्रकाशोऽत्र विषये यथोचितं कर्तुं शक्ष्यते । महानयं समारम्भोऽल्पीयसी च मद्विधानां शक्तिः । तदपि वेदानां प्रचारः कर्तव्य एव सर्वेण सर्वदेति गुरूणामाज्ञां शिरोधार्य्यां कृत्वाङ्गीकृतोऽयं प्रयत्नः । सन्त्येवात्रानभ्याससुलभा मानुष्यकदुर्वाराश्च बहवो दोषाः । तस्मात् कार्यस्य महत्त्वं विचार्य्य गुणानुरागसहजमौदार्य्यं च हृदि समुद्भाव्य स्खलितसमाधानानुग्रहेण विद्वद्वरैः स्वप्रसादस्य भाजनं विधेयः स्वविधेयोऽयं जनः.

लवपुरपत्तने<br>वैदिकाश्रमस्थः<br>१–३–१९८६

विश्वबन्धुः

# भूमिका.

१ यद्यपि संस्कृतभाषा में अनेक शब्दकोष हैं। परन्तु ऐसा एक भी कोष मिलना कठिन है जिस के द्वारा वेद के शब्दों का अर्थपरिचय हो सके। वेद की भाषा सर्व-प्राचीन होने से अनेक अंशों में पिछली संस्कृत से भिन्न थी। इस भेद से पूर्ण परिचय हो जाने पर, पाठकवर्ग बड़े आश्चर्य से युक्त होते हुए यह अनुभव करेंगे कि कालिदासादि कवियों की पुस्तकों की अपेक्षा वेदों की भाषा सर्वप्रकार से अधिक सरल तथा रसीली है।

२ इस आवश्यकता की पूर्त्यर्थं ही आज से लग भग पचीस वर्ष पूर्व, आर्यजगद्विख्यात स्वामी विश्वेश्वरानन्दजी तथा स्वामी नित्यानन्दजी ने वेदों का शब्दार्थकोष रचने का संकल्प किया। उन की छपाई हुई वेदों की शब्द-सूचियां बड़ी उपयोगी हो रही हैं। स्वामी नित्यानन्दजी की तो शीघ्र ही मृत्यु हो गयी। परन्तु वृद्ध स्वामी जी लगातार परिश्रम करते रहे। इस कार्य के लिये धन का भी और जन का भी संग्रह आवश्यक था। राजे महाराजों से उन्होंने इस कार्य के लिये धन प्राप्त किया। सं १९८० तक कोष के सम्पादन का कार्य कई स्थानों पर कराते हुए, आप लाहौर पधारे। यहां योग्यपुरुषों तथा आर्यनेताओं की सम्मति से उन्होंने इस कार्य के भार को मेरे कन्धों पर रख दिया। यद्यपि मेरा इस विषय में विशेष अनुभव न था और मैं अन्य पर्य्याप्त कार्यों में पूर्व से संलग्न भी था, तो भी स्वामी जी की लगन तथा वृद्धों की प्रेरणा से बाधित होकर, मैं इधर लग गया। दो वर्ष पीछे, स्वामी जी का भी देहान्त होगया। उन के पीछे, उन की वसीअत से बनी हुई 'विश्वेश्वरानन्दसम्पत्प्रबन्धिनी सभा' के निर्देशानुसार इस धार्मिककृत्य का धार्मिक-भाव से सम्पादन हो रहा है।

३ इस कोष की विशेषताएं ये हैं:—

(क) संस्कृत, हिन्दी तथा अंग्रेजी में होने से यह सर्वप्रिय और सर्वोपयोगी होगा।

(ख) प्रत्येक शब्द का पूर्ण व्याकरण, निरुक्त तथा आधुनिक भाषाज्ञान दिया है।

(ग) प्राचीनतम ब्राह्मण, आरण्यक, उपनिषद्, सूत्रग्रन्थादि में दिये हुए व्याख्यानों के साथ २, पुराने से पुराने और स्वदेशीय, विदेशीय नये से नये भाष्यों का इस में समावेश किया गया है। इन में से कई जो अभीतक प्रकाशित भी नहीं हुए बड़े परिश्रम से उनके हस्तलेखों का संग्रह किया है।

(घ) जर्मन आदि भाषाओं से अनभिज्ञ पाठकों को सारी सामग्री यहां पर मिल सकेगी। भारतीय पण्डितों के लिये सब पश्चिमी अर्थों को संस्कृत में कर दिया है। और साधारण स्वाध्यायशील जनता के उपकारार्थ, सारी सामग्री हिन्दी में भी कर दी गयी है।

(ङ) हिन्दी में सरलताके विचार से केवल अर्थों का संग्रह किया है। प्रमाणादि के लिये संस्कृतभाग से विना विशेष प्रयत्न के उत्साही पाठक परिचय प्राप्त कर सकते हैं। संख्या का क्रम दोनों भागों में समान ही है।

४ यद्यपि इस कोष के गौरव को यथावत् वे ही समझ पावेंगे जो अंग्रेजी तथा संस्कृत अथवा संस्कृत से भली प्रकार परिचित हैं, तो भी हिन्दी-विज्ञ जनता भी अपनी योग्यतानुसार लाभ उठावेगी इस में रती भी संदेह नहीं है। इस कार्य के सम्पादन में अनेक दोष रह गये होंगे। शायद मानुष कार्यों का दोषरहित होना असंभव भी है। अस्तु, जो कुच्छ भी किया है, पूर्ण परिश्रम से तथा न्याय से युक्त हो कर किया है। प्रायः सभी भाष्यकारों की कड़ी समालोचना करनी पड़ी है। उन के एक २ पद की परीक्षा की गयी है। अशुद्ध पाठों की ओर पाठकों को संकेत कर दिया है। अशुद्ध अर्थों का भी विचार रख दिया है। इस में किसी दैशिक अथवा साम्प्रदायिक भाव अथवा पक्षपात को स्थान न मिलना चाहिये था, और ना ही दिया गया है। वेद सारे संसार की सम्पत्ति है। इस समय चारों वेदों की दश संहिताएं मिल सकती हैं। उन्ही के शब्दों का इस कोष में पूर्ण विस्तार दिया गया है। भगवान् से प्रार्थना है कि इस महान् कार्य के सम्पादन का जो सर्वोपकारक लक्ष्य रखा गया है, वह सिद्ध हो। जनता में वेदानुराग बढ़े। वेदभक्तों का वेदज्ञान बढ़े। वेदज्ञों की तर्कशक्ति बढ़े। स्वतन्त्रविकास के साथ २ लोकोपकारी वैदिक आचार, विचार का पुनः जगत् में प्रचार हो। इन शब्दों के साथ यह सैंकड़ों ग्रन्थों का साररूप ग्रन्थ पाठकों के करकमलों में भेंट किया जाता है।

वैदिकाश्रम, लाहौर
१-३-१९८६

विश्वबन्धुः

# A Complete Etymological Dictionary of the Vedic Language.

## INTRODUCTION.

### *I. General importance of the Vedas.*

The position which the Vedas occupy in the whole range of the literatures of the world, is in many respects unique. They come down from times immemorial, well protected and wonderfully preserved through so many vicissitudes of history. They are a grand monument of the hoary past of the Āryāvarta and unquestionably surpass other literatures in point of antiquity.

Their natural and lucid style, easy flow, terse and pithy maxims, noble utterances, deep and sweet notes, typical metaphors, sublime similes, living delineation of character and matchless personification of nature—these and many other sterling qualities of diction and significance mark them off from the rest of our literary treasures. Though bearing the stamp of hoary antiquity, they are as fresh as ever. Their theme is such as never grows old. The Sindhu and the Vitastā still whisper in their ripples the primeval songs of the Vedas, and may well begin to resound forthwith if another Vasiṣṭha or a Vis'vāmitra were to come and set them to the same sweet music once again. There is more of life and vigour in the Vedas than in most of what we read or write now-a-days.

Whereas these sovereign virtues have of late endeared the Vedas to Oriental scholars of note all over the world, they possess a double charm for us. They form the fountain-head of all that we love most—our religion, our languages and literatures, our moral aspirations and ethical standards, our social structure and political and economic welfare. Through all the ups and downs of our past history, they have been to us a source of boundless light in steering our way clear of so many obstacles and pitfalls. Like a true and never-failing friend, they have ever come to us, full of high-pithed inspiration and national vigour. Doctors ever differ, and India has been no exception to this universal phenomenon. But the watch-word of the Vedas has often been found potent enough to quell their dissensions and pacify their strifes. The proudest among our forefathers bowed their head before two and two alone, namely, the Almighty Father and His word. And, well did the great Swāmī Dayānanda Sarasvatī—that giant among men and peerless embodiment of the Vedic life and thought turn our face once more towards the selfsame source of light and strength in order that we may become fit for passing successfully as a nation through the tough trial that is confronting us to-day.

## *II. The genesis and personal perspective of the work.*

The language of the Vedas is not difficult, yet the general impression on this point is just the reverse of this. This can be easily explained. The Classical literature, namely, the Epics, the epic poetry and the dramas with which an average Saṃskṛit scholar is generally familiar, represents a later linguistic stratum than the Vedic literature. Many Vedic words and grammatical idioms and constructions have grown old, superfluous and obsolete. If by some means we could get acquainted with the meanings of the special and for the matter of that, unfamiliar vocabulary of the Vedas and have a general idea of their grammar, we could surely begin to regard them as the easiest literature, at least so far as understanding the literal construction of the text is concerned.

With these ideas in their minds, Swāmī Vis'ves'varānanda and Swāmī Nityānanda, the two well-known Ārya Sannyāsīs of all-India reputation set about the work of preparing and placing in the hands of the public a complete Vedic Dictionary. The first contribution in this direction was the publication in 1908, of the Alphabetical Index of the vocabulary of the four principal Vedic texts. This work has to a great extent helped in the extensive and critical study of the Vedas. One has no longer to grope in the dark or call up unusual patience for comparative references in connection with particular words, occurring more than once at different places in the texts. It also helps in dividing a certain text into its component *padas*, each *pada* bearing a clear indication of its accent and sometimes its grammar. Thus it has rendered good service and still continues to do so in the noble and meritorious cause of the promulgation of the Vedic studies. No Dictionary of the Vedas could be proceeded with without first defining the extent of the basic vocabulary and as such, the publication of the Index Verborum may justly be considered as the first and most necessary step towards the preparation and compilation of the Dictionary proper.

But who can know the ways of the Providence? As the second instalment of the work was being planned and proper arrangements were being made, Swāmī Nityānanda, the younger of the two noble beginners, breathed his last after a brief period of illness. Thus bereft of the invaluable help and advice of his dear disciple and life-long colleague, the elderly sage Swāmī Vis'ves'varānanda, nevertheless, continued his noble work with undiminished zeal. He left no stone unturned in attracting the attention of various Chiefs and Princes towards the importance of his life-mission. The Darbars of Baroda, Mysore and Indore responded to his appeals and munificently helped him in his useful programme.

He tried different places as centres of his work, and employed competent scholars for carrying on his scheme, till at last it occurred to him that this momentous work could in consonance with the resources at his command be properly done at Lahore. Being the political, the educational and the Ārya Samājic capital of the Panjab, the sacred habitat of the Vedic

Riṣis, it appeared to him to be the most suitable place for the ripening and the completion of his lexicographical scheme. It was towards the end of 1923, that he in consultation with R. B. L. Mūl Rāj, the veteran leader and first president of the Ārya Samāja and Mahātmā Hans Rāj, the revered leader and present head of the same body, desired me to take the work upon myself. I was alive to my shortcomings and besides this, my hands were already full. I hesitated from undertaking this new burden, but at last had to submit to the persuations of those for whom I had the greatest regard in my heart. I accepted the task as a labour of love in compliance with their noble wishes.

Though entirely satisfied with the arrangement and progress of the work, the Swāmiji was not destined to see full fructification of his hard labours. The cruel hand of death snatched him away on November, 23rd 1925, at Delhi. His death was mourned by everybody, for he was a learned Sannyāsī of the old school. The idea of the Vedic Dictionary had been the one master passion and the one guiding principle throughout the major portion of his austere life. Indeed, he lived for it and he died for it. By his last Will, he appointed a body of patriotic gentlemen as the executors of his Will and trustees of his estate, and desired them to arrange for the speedy completion of the Vedic Dictionary. The work is thus going on in the Vis'ves'varānanda Research Institute, which is located in the Dayānanda Brāhma Mahāvidyālaya, Vedic-Ās'rama, Lahore and maintained and financed by the executors of the Swāmiji's Will.

The Managing Committee of the D. A.-V. College, Lahore, the body controlling the D. B. Mahāvidyālaya also, has been very kind to me so much so that they have always encouraged me to devote as much time as may be necessary for the execution of this work. Individual friends have also helped me in various ways and I am thankful to them for all this kindness. Before, however, proceeding to discuss the nature of the work, I must express my great indebtedness to my revered teacher, Mr. A. C. Woolner, the Vice Chancellor and Dean of the Panjab University. Whenever I have sought his advice in connection with the scheme of the Dictionary, he has always helped me with his highly reasonable suggestions and valuable remarks. In fact, every detail has been discussed with him more than once, and much of what it is in its final form, is a direct result of his healthy criticism. He has placed in my hands his extensive notes to be used in writing the philological section which he has also agreed to revise. Really, I can feel how he has all along been kind to me, though I cannot adequately express the same in so many words. Besides, the executive of the Linguistic Society of India have also laid me under a great debt of gratitude by agreeing to help me with their valuable contributions towards completion of the same section.

### *III. Nature of the work.*

It may seem astonishing, but it is a fact that this will be the first regular and substantial attempt to accord a complete lexicographical treat-

ment to the vocabulary of the Vedic language as distinguished not only from the Classical Saṃskṛit but also from its own later phase used in the Brāhmaṇas and the Upaniṣads. The early Nighaṇṭukāras did indeed compile and arrange according to certain lines of differentiation, select lists of Vedic words. These were in turn commented upon by the Nirukta. The latter evolved a system of genuine etymology and used it in deriving the Nighaṇṭus. They quoted by way of contextual testimony Vedic passages where those words occurred and also reported the opinions and interpretations of other rival schools of interpretation, notably, the 'Yājñikas' and the 'Aitihāsikas'. Yāska's Nirukta along with its basic Nighaṇṭu is a typical, extant illustration of this class of composition. It is at best Yāska's learned commentary on a few hundred verses of the Veda. It cannot be called a Dictionary of the Vedas.

But genuine Dictionaries also are not wanting in Saṃskṛit. They are most of them learned lexicographical treatises, written in verse. The 'Bṛihad Vācaspatyam, and the 'S'abda Kalpadruma' are really monuments of the long and laborious toil of their authors. They are modern works written according to the alphabetical arrangement-method and are to be distinguished from the verse-treatises of Amarasiṃha, Halāyudha, Hemacandra and other writers of the mediaeval school. They are voluminous works and shed copious light on the usage of words in the Post-Vedic literature. None of these, however, pertains to the Vedas only. Indeed, it is not possible with the help of these to distinguish Vedic meanings of certain words from those which refer to their usage in later literature. Their arrangement of meanings is neither strictly etymological nor is there any chronological sequence in it. Moreover, their primary reference being to the Saṃskṛit language in general, not a few purely Vedic words have been entirely skipped over.

The epoch-making St. Petersburg Lexicon really rendered yeoman's service during the early years of the newly aroused enthusiasm for the Saṃskṛit learning in the West. Although it is also a Saṃskṛit and not a purely Vedic Dictionary, it has been and is still capable of helping in the Vedic studies in as much as its arrangement of meanings and references is fairly scientific and chronological. But good many scholars have since added to our knowledge about the Vedas. Subsequent to the publication of this Wörterbuch, Böhtlingk brought out his minor St. Petersburg Dictionary. Recently, R. Schmidt has supplemented the above with his own contribution, in eight instalments. Monier William's Dictionary has some peculiar features of its own. Benfey, Wilson, Macdonell and Āpte have also since given to the world Saṃskṛit Dictionaries, all very good so far as their plan and the execution thereof is taken into consideration, but none of these can properly be called a Vedic Dictionary.

Grassmann's Dictionary of the Ṛigveda does come undoubtedly very near. But, then, its scope is limited to the Ṛigveda alone. Besides, it does not refer to the authorities to whom different interpretations are due.

It is also important to remember that most of these lexicographers have rather been onesided in recording the meanings of the Vedic words. They have made much of their own philological conjectures and rather been unduly and unjustly prejudiced against Indian commentators. In this matter, they have implicitly followed the footsteps of Roth. The latter firmly decided not to pay any regard to the Indian commentators of the Vedas, and had fully carried out his decision in preparing his otherwise really great Wörterbuch. He shows his contempt for the Indian commentators particularly in his Foreword to the same ( p. 5 ) "*dass ein gewissenhafter europaeischer Erklaerer der Veda weit richtiger und besser verstehen koenne als Sāyaṇa*".

Roth and after him his followers have been following only linguistic methods, that is to say, they have been believing that through the mere mastery of grammatical forms, through vague concepts resulting from etymological analysis and through the keys of common analogies they could discover the deep sense and meaning of Vedic poetry. What incongruent and funny results this boastful linguistic method may lead to may be demonstrated by Whitney's rendering 'child' of the word 'बाल' cf. A. X, 8, 25. '*one thing is more minute (a'ṇu) than a child (bā'la)*' It may be a characterstic but in nowise a solitary case of learned folly. A change for the better is however apparent in the outlook of at least some of these Occidental savants. Thus Pischel and Geldner boldly questioned the onesided view of their precursors in the field of Vedic studies, and many a scholar in the East as well as the West has followed in their wake in this respect. The guiding principle of the programme set before them by these scholars is that the Veda is an Indian monumental document and must be accepted and explained as such. The language and the ideas of the Vedas must be interpreted not only from themselves, but also by the use of the later Brāhmaṇic literature, the knowledge of which must therefore be regarded as indispensable for any student of the Vedas. In this way, by the establishment of the Vedas as the earliest literary monument of Hindu culture, the value of vague phonetic equations and conjectural philologies has suffered a definite depreciation and these can no longer be depended upon as being the only reliable criteria for determining the true import of the Vedic words.

The present work is expected to be free from all kinds of these defects. It has no preconceived notions of exactness or otherwise of any interpretation. With the Index Verborum in one hand and the present work in the other, a student may well hope to understand how each and every word of the Vedas has all along been interpreted, from the most ancient times to our own day. Every word is first grammatically and etymologically explained. Next follow its meanings, culled from the Brāhmaṇas, the Upaniṣads and the Sūtra literature and the commentaries, the oldest and the latest, the Eastern as well as the Western, categorised and divided in accordance with the philological stage represented by them. Every shade and distinctive import has been recorded and original authorities fully referred to. It may at best be a work of careful record and

instructive reference. There may not be much in the way of positive assertion and original contribution. A vigilant reader will however find for himself at every step that a note of warning has been sounded at every pitfall that may happen to come in his way in the form of a doubtful interpretation, a fanciful conjecture or a positively misleading meaning. Ordinarily, a Dictionary of a language is supposed to record sure and certain meanings of its words. They can be attested by authoritative literary and colloquial usage. But no such thing is possible in a Dictionary of the Vedas. It has to satisfy itself by honestly recording variety of opinion and critically questioning the validity of only such interpretations as may appear to be obviously wrong or improbable. To let this kind of renderings pass unlabelled could have not only not added anything to the present knowledge of an average student but on the other hand, inevitably, made confusion worse confounded. This having been done, literary equipment and critical acumen of a reader should stand him in good stead in forming his own views for himself. He will at a glance be in possession of a store of useful information which could only be possible for him to get by wading through hundreds of pages of obscure books and commentaries, some of which have even not yet seen the light of the day.

A remarkable peculiarity of this Dictionary is its tri-lingual composition. The Saṃskṛit Section which is really the main body of the work, is given the first place. The Hindi Section gives meanings only. It has been added for the use of such readers as not being well up in Saṃskṛit may find it rather difficult to follow the Saṃskrit Section. Last in order comes the English Section. It is in a way quite independent of the Saṃskṛit Section, for, whereas the latter includes every shade of meaning due to the Western as well as the Eastern interpreters, the former does not purport to take any notice of that interpretation which has not been advanced or taken advantage of by the Western scholars. The reason for this contrivance is not far to seek. Every Western student of the Vedas must need be conversant with the Saṃskṛit language, at least to the extent of being able to follow the Saṃskṛit Section of this Dictionary. But it is not to be expected that all Saṃskṛit Pandits should know Western languages. It is with a view to benefit them by rendering their knowledge up-to-date and making them a-breast with modern criticism and method that the Saṃskṛit Section has in this way been enriched by the inclusion of the Western interpretations in its body. This scheme is intended to make it possible for general as well as critical scholars of the Vedas, all the world over, to derive from this Dictionary the maximum gain according to their needs.

And, in concluding this section, it may be useful to point out a necessary limitation in the nature of the present work. The Vedic language is known to us as recorded in the Saṃhitās, the Brāhmaṇas, the Āraṇyakas and the Upaniṣads. The Saṃhitās represent its oldest stratum and it is this which has been made the material-basis of this Dictionary. All available Saṃhitās, whether in printed or in manuscript form, have been utilised for

this purpose. Illustrative and parallel Brāhmaṇic contexts have, however, been given proper prominence, and in this manner, a substantial portion of the later Vedic stratum has also been dealt with. A complete lexicographical treatment of the same is intended to form the subject of a supplementary work.

## IV General plan and arrangement.

Head-words or lexicographical elements are declinable substantives, namely, nominal, pronominal and adjectival bases, indeclinables, namely, prepositions, conjunctions, interjections, adverbs, verbal participles, gerunds and infinitives and, lastly, verbal radicals, the lowest common denominators of a long array and multitudinous variety of verbal formations. These different types have not been separately treated as they are done in a grammatical treatise. Here all words come in their alphabetical order. It is their individual treatment which will give a clue to their variety of grammatical function.

Before taking up the meanings of a word, its necessary grammar and etymology is given. Accent is marked and in the case of substantives, gender is indicated. This indication is based on the Vedic usage of a word and, in cases of departure from that usage in later times, a separate note has been added wherever required. In the etymological analysis, the Pāṇinian and the Nirukta-systems and the Brāhmaṇic etymologies on the one hand and modern contributions on the subject on the other hand, have been amply utilised. Where no commentary is available or the extant ones are silent, we have recommended certain etymologies of our own. These are, however, easily distinguishable from others whose source is always indicated.

In the arrangement of the meanings of a word, etymological and semantological sequence has been followed. It has not been possible to adhere to any strictly defined chronological classification. The reason is obvious. While some meanings of a word having remained popular in the Vedic period fell out of use in later times, others have been tenacious enough to come down to our own times and are easily discernible in our present day vernaculars. The history of every word has been traced down to the most recent times and purely later meaning have been marked off from the rest. Every meaning and its shade is followed by a complete indication of the source whence the same has been incorporated. In cases where no such reference be detectable, responsibility for hazarding those interpretations lies on our shoulders.

The Brāhmaṇas comprise among themselves a store-house of Vedic interpretation. Symbolical meanings, however, are also often attached to certain words. It sometimes becomes difficult to differentiate between the literal and the figurative explanations. It may be due to this, that most of the Western scholars have been viewing this literature with a doubtful eye. According to them, one never feels sure of the ground under

